# ॐ

# ओं नमो भगवते गोपीनाथाय

## श्रीगुरुपादुकास्तुतिः

ग्वरॅदीवॅ लगयो ग्वरॅ पादुकाय
ग्वरॅदीवॅ लगयो ग्वरॅ साधनाये

ग्वरॅ शब्दॅ सुतॅ तारतम अपोर
ग्वरॅ शब्दॅ सुतॅ तारतम अपोर



# ॐ श्रीगणेशाय नमो नमः

ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥१॥
अभिप्रेतार्थ-सिद्धयर्थं पूजितो यः सुरैर् अपि ।
सर्वविघ्नच्छिदे तस्मै श्रीगणाधिपतये नमः ॥२॥
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुः साक्षात् महेश्वरः ।
गुरुरेव जगत् सर्वं तस्मै श्रीगुरवे नमः ॥३॥
अखण्ड-मण्डलाकारं व्याप्तं येन चराचरम् ।
तत् पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥४॥
अज्ञान-तिमिरान्धस्य ज्ञानांजन-शलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥५॥
नमामि सद्गुरुं शान्तं प्रत्यक्षं शिव-रूपिणम् ।
शिरसा योग-पीठस्थं धर्म-कामार्थ-सिद्धये ॥६॥
ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ।
शास्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥७॥
यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ।
उभयोरन्तरं नास्ति गुरोरपि शिवस्य च ॥८॥
यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयम् ।
स एव सर्वसम्पत्तिस्तस्मै श्री गुरवे नमः ॥९॥
नमस्ते गुरवे तस्मै इष्टदेव स्वरूपिणे ।
यस्य वागमृतं हन्ति विषं संसारसंज्ञकम् ॥१०॥

*कुलार्णवतन्त्र*

# श्री भगवते गोपीनाथाय नमः

## ॥ श्री गुरुपादुकास्तुतिः ॥

वन्दे लम्बोदरं देवं वन्देऽहं गुरुपादुकाम् ।
स्वस्थं साक्षात् शिवं वन्दे गोपीनाथं भवार्तिहम् ॥१॥
भगवन्! हे महायोगिन्! कं न रक्षसि प्रार्थितः ।
प्रत्यहं कामये एतत् स्याम् भवत्स्मरणपरः ॥ २ ॥
सदाशिव! सदाधार! सत्कल्पपादपो भवान् ।
सद्-बुद्धिं देहि मे नाथ! यतस्त्वं करुणापरः ॥ ३ ॥
नाथ! ते सुविभा भाति अमृतस्राविणी सदा ।
पीयूष-विकिरैः तीव्रैः हृत्गर्तानि प्रपूरय ॥ ४ ॥
हे गोपीनाथ भगवन्! त्वं शरण्योऽसि शान्तिदः ।
त्वदर्चनपरः को न याति द्राक् परमं पदम् ॥ ५ ॥
साधको योऽथवा सिद्धः त्वद्ध्यान-स्मरणेरतः ।
स्मरन् त्वामेव सततं त्वन्मयो जायते क्षणात् ॥ ६ ॥
त्वच्चरित्रं महापुण्यं पापशाप प्रशामकम् ।
सर्वदुःखौहर्तारं हृदयावर्जकं परम् ॥ ७ ॥
क्षीणपुण्यो महापापी ध्यानचिन्तनवर्जितः ।
संकीर्तनेन त्वन्नाम गंगातोय-समं भवेत् ॥ ८ ॥
हे गोपीनाथ भगवन्! भक्तिमल्लोकलोकित ।
निजं ज्ञानकरं पाणिं मयि दीने निधेहित्वम् ॥ ९ ॥
त्वत् रहस्यं स्फूर्तिकरं सुगुप्तं त्वतहृदिस्थितम् ।
अहं जाने भवत्प्रीत्या यथा त्वं मत् हृदिस्थितः ॥१०॥
साम्प्रतमपि त्वं नाथ! भक्तरक्षण तत्परः ।
येन केनापि वेषेण लोके चरसि निर्भयः ॥ ११ ॥
अचिरेणैव कन्यैका सुसेविका भवत् प्रभो! ।
धारणेन भवत् चित्रं गले सा न जहौ वपुः ॥ १२ ॥

वन्देऽहं गुरु पादुकाम्

## अथ बीज मंत्रम्

उों नमो भगवते गोपीनाथाय संवित्-स्वरूपाय फट्
नमः उों ॥

महीयसीं महाकारां सर्वसंकल्प साधिकाम् ।
शिवसायुज्यदां शान्तां वन्देऽहं गुरुपादुकाम् ॥ १ ॥
भीमेऽगाध संसार-सागरे मकराकुले ।
तारणे उद्यतां नित्यं वन्देऽहं गुरुपादुकाम् ॥ २ ॥
अस्फुटस्य म्लानस्य हृत् पद्मस्य विकासने ।
क्षमां आर्तिहरां दिव्यां वन्देऽहं गुरुपादुकाम् ॥ ३ ॥
विद्याधरैर्वन्दनीयां योगमार्गे प्रवर्तिकाम् ।
भद्ररूपां भद्रकरां वन्देऽहं गुरुपादुकाम् ॥ ४ ॥
चैतन्यामृतजलधेरुत्पन्नां चन्द्रिकामिव ।
शान्तिदात्रीं सौम्यरूपां वन्देऽहं गुरुपादुकाम् ॥ ५ ॥
आधिव्याधिहरां दात्रीं भवसम्पत् सुदुर्लभाम् ।
विश्वोपचारनिरतां वन्देऽहं गुरुपादुकाम् ॥ ६ ॥
कालाहिदष्ट भ्रष्टस्य प्रपन्नस्य विश्रान्तिदाम् ।
शिवाख्यां लोकधात्रीं च वन्देऽहं गुरुपादुकाम् ॥ ७ ॥
पारिजातसमां पूर्णां सर्वकामफलावहाम् ।
अनन्यां सुरसेव्यां च वन्देऽहं गुरुपादुकाम् ॥ ८ ॥
विष्णुब्रह्मेन्द्र नमितां प्रणवाख्यपद-प्रदाम् ।
शक्तिरूपां स्वस्वरूपां वन्देऽहं गुरुपादुकाम् ॥ ९ ॥
स्वसंवेद्यां स्वमार्गस्थां स्वतेजसां निराकुलाम् ।
अव्ययां अकुलां नित्यां वन्देऽहं गुरुपादुकाम् ॥१०॥

योगक्षेमङ्करीं हृद्यां वराभयधरां प्रियाम् ।
स्वरूप-गोपन व्यग्रां वन्देऽहं गुरुपादुकाम् ॥ ११ ॥
सर्वदिवैर्नर्थ्यमानां रोगशोकापहारिकाम् ।
भ्राजमानां सदा वेद्यां वन्देऽहं गुरुपादुकाम् ॥ १२ ॥
शुभ्रां कान्तां मलातीतां बिन्दुरूपां च सात्त्विकाम् ।
खस्थां त्रिस्थाममृतपूर्णां वन्देऽहं गुरुपादुकाम् ॥१३॥
शरण्यां शाङ्करीं सिद्धां सर्ववर्णार्चितां पराम् ।
अरूपां च सुरूपां च वन्देऽहं गुरुपादुकाम् ॥ १४ ॥
मुनीन्द्रस्य वरेण्यस्य "बबा"ख्यस्य महात्मनः ।
सर्वसिद्धिप्रदं स्तोत्रं पिकेन रचितं मया ॥ १५ ॥
यथा मित्रोदये सद्यः हिमं नश्यति सर्वशः ।
तथा पापानि क्षीयन्ते, स्तोत्रस्यास्य सुचिन्तनात् ॥ १६ ॥
यः पठेत् प्रयतो भक्तः स्वगुरोः सन्निधिंगतः ।
इदं स्तोत्रं सदा भक्तया गुरुस्तस्मै प्रसीदति ॥ १७ ॥

*मक्खन लाल कुकिलू*

(३)

## क्षमास्तुतिः

### गोपीनाथाय नमो नमः

'हारमाली' कुक्षिजाताय गोपीनाथाय नमो नमः
महर्षि कश्यपपुत्राय गोपीनाथाय नमो नमः
कश्मीरमण्ड़लवासिने गोपीनाथाय नमो नमः
अष्टसिद्धि प्रदायिने गोपीनाथाय नमो नमः

अद्वैतवादनिरताय गोपीनाथाय नमो नमः
दुष्ट-दानवनाशकाय गोपीनाथाय नमो नमः
स्वच्छन्दभैरव रूपाय गोपीनाथाय नमो नमः
शक्तिरूपाय गोपीनाथाय नमो नमः
व्यक्ताव्यक्तरूपाय गोपीनाथाय नमो नमः
सत् चिदानन्द रूपाय गोपीनाथाय नमो नमः
योगिजनवन्द्याय गोपीनाथाय नमो नमः
सौम्यमूर्ति स्वरूपाय गोपीनाथाय नमो नमः
भुक्तिमुक्तिप्रदायिने गोपीनाथाय नमो नमः
ज्ञानविज्ञानरूपाय गोपीनाथाय नमो नमः
मायातीताय गोपीनाथाय नमो नमः
ब्रह्मानन्ददायकाय गोपीनाथाय नमो नमः
मोहान्धकारनाशकाय गोपीनाथाय नमो नमः
रुद्राक्षमालाधराय गोपीनाथाय नमो नमः
भस्मभूषितशरीराय गोपीनाथाय नमो नमः
चन्दनालङ्कृतललाटाय गोपीनाथाय नमो नमः
श्वेताम्बरधराय गोपीनाथाय नमो नमः
शरत्चन्द्रगात्राय गोपीनाथाय नमो नमः
पद्मपत्रवत्निर्लेपाय गोपीनाथाय नमो नमः
शिवध्यानसंलग्नाय गोपीनाथाय नमो नमः
साकाररूपाय गोपीनाथाय नमो नमः
धृतहस्तत्रिशूलाय गोपीनाथाय नमो नमः
सर्वमंगलकारकाय गोपीनाथाय नमो नमः
आनन्दनस्वरूपाय गोपीनाथाय नमो नमः
योगाभ्यासनिरताय गोपीनाथाय नमो नमः
क्षमा खड्गहस्ताय गोपीनाथाय नमो नमः

बद्री नाथ कल्ला

(४)

# गोपीनाथं नमाम्यहम्

श्रीमन्तं दुःखहर्तारं सर्व सौख्यप्रदं विभुम् ।
आराध्यममरैर्वन्द्यं गोपीनाथं नमाम्यहम् ॥१॥
विवेकिनां विवेकस्थं ज्ञानिनां ज्ञानदं परम् ।
अवधूतं महादूतं गोपीनाथं नमाम्यहम् ॥२॥
सदा सर्व जनैरीड्यं शुभाशुभस्य साक्षिणम् ।
आनन्दविग्रहं देवं गोपीनाथं नमाम्यहम् ॥३॥
चित्स्वरूपं द्वयातीतं प्रचण्डभवतारकम् ।
शरणागतत्रातारं गोपीनाथं नमाम्यहम् ॥४॥
शाश्वतं शंकरं शम्भुं देशिकममिततेजसम् ।
संकल्पपंकहीनं तं गोपीनाथं नमाम्यहम् ॥५॥
स्वात्मसंस्थं महादेवं घोरध्वान्त निवारकम् ।
त्रितापहरणे व्यस्तं गोपीनाथं नमाम्यहम् ॥६॥
हृत्पद्म भास्करं देवं शश्वत् शान्ति समावृतम् ।
परतेजोमयं दिव्यं गोपीनाथं नमाम्यहम् ॥७॥
बिन्दुनादकलातीतं अलभ्यं अति दुर्लभम् ।
योगिनां अग्रगण्यं तं गोपीनाथं नमाम्यहम् ॥८॥
सर्ववाङ्मय ज्ञातारं अमेयं अकुलं कुलम् ।
प्रकाश विभवस्फीतं गोपीनाथं नमाम्यहम् ॥९॥
हरवत् अहर्तारं भववत् भूतिवर्धकम् ।
शिववत् श्यति दुःखौघम् गोपीनाथं नमाम्यहम् ॥१०॥
सहाकारं भवाधारं महाध्यानपरायणम् ।
त्र्यम्बकं त्रिगुणातीतं गोपीनाथं नमाम्यहम् ॥११॥

विमलं घोरमूर्तिं च ओरेणात्मसात्कृतम् ।
पराभावे सदा संस्थम् गोपीनाथं नमाम्यहम् ॥१२॥
सदोदितं सदा स्तुत्यं अनुभूत्या महोज्ज्वलम् ।
पण्डितं समद्दृष्टारं गोपीनाथं नमाम्यहम् ॥१३॥
भैरवं भैरवाकारं कार्यकारणकारकम् ।
परं बृंहितब्रह्माणं गोपीनाथं नमाम्यहम् ॥१४॥
भास्वरं भूसुरं भव्यं भूदिक् गो खे सदा ततं ।
वरेण्यं व्यापिनं व्योमम् गोपीनाथं नमाम्यहम् ॥१५॥
'हारमाली' प्रसूर्यस्य शक्तिरूपा महाबला ।
रुद्रांशं रौद्ररूपं तं सद्गुरुं प्रणमाम्यहम् ॥१६॥
इदं स्तोत्रं देवप्रियं अन्वहं यइ पठेत् पुमान् ।
सः 'बब' स्य कृपाकांक्षी नूनं भवति तत्क्षणात् ॥१७॥
प्रेरणया 'बब' स्यैषा पिकेनरचिता मया ।
स्तुतिः रम्या परं हृद्या सर्वाभीष्टफलप्रदा ॥१८॥

*मक्खन लाल कुकिलू*

(५)

# गुरु-वन्दना

आनन्दं स्वात्मानन्दं भगवन्तं गोपीनाथम नमामि
पूज्यं महासन्तं भगवन्तं गोपीनाथम नमामि
दुःखहर्तारं सुःखदातारं भगवन्तं गोपीनाथम नमामि
दयाद्रं अवधूतं भगवन्तं गोपीनाथम नमामि
ध्यानरूपं कर्मस्वरूपं भगवन्तं गोपीनाथम नमामि

आराध्यं प्रणवाकारं भगवन्तं गोपीनाथम नमामि
सर्वाकारं ज्ञानरूपं भगवन्तं गोपीनाथम नमामि
स्तुत्यं मुक्तिदातारं भगवन्तं गोपीनाथम नमामि
निरुपाधिं स्फुटाकारं भगवन्तं गोपीनाथम नमामि
भयहर्तारं त्रातारं भगवन्तं गोपीनाथम नमामि
प्रकाशरूपं महादूतं भगवन्तं गोपीनाथम नमामि
अर्चनीयं दानवीरं भगवन्तं गोपीनाथम नमामि
द्वैतदाहकं ज्वालाकारं भगवन्तं गोपीनाथम नमामि
ध्यानगम्यं ध्यानार्हं भगवन्तं गोपीनाथम नमामि
विश्वरूपं विश्वोत्तीर्णं भगवन्तं गोपीनाथम नमामि
प्रमेयं सनातनं भगवन्तं गोपीनाथम नमामि
मार्ग-दर्शकं ज्ञानमूलं भगवन्तं गोपीनाथम नमामि
दीप्तिमन्तं कृपालुं भगवन्तं गोपीनाथम नमामि
प्रत्यक्षं आत्म-ज्ञानिनं भगवन्तं गोपीनाथम नमामि
दयारूपं परोपकारिणं भगवन्तं गोपीनाथम नमामि
वरेण्यं ज्ञानदातारं भगवन्तं गोपीनाथम नमामि
पायं पायं अमृतरूपं भगवन्तं गोपीनाथम नमामि
अभिवन्द्यं निर्गुणं भगवन्तं गोपीनाथम नमामि
दयासागरं ईश्वरं भगवन्तं गोपीनाथम नमामि
शान्तस्वरूपं निरञ्जनं भगवन्तं गोपीनाथम नमामि
ब्रह्मचारिणं भक्तवत्सलं भगवन्तं गोपीनाथम नमामि
शरणागतं ब्रह्म-स्वरूपं भगवन्तं गोपीनाथम नमामि
बब सच्चलीनं जनपालकं भगवन्तं गोपीनाथम नमामि

जय गुरुदेव

*चमन लाल राज़दान*

प्रथम संस्करण - जुलाई २००२ — २०००

१०४ वीं महाजयन्ती

३ जुलाई २००२ (सूर्य संचार)

तथा

२१ जुलाई २००२ (चन्द्र संचार)
(आषाढ़ शुक्ल द्वादशी)

प्रकाशक - जगद्गुरू भगवान् गोपीनाथ जी
महाराज के दासों के दास

मूल्य - पांच रूपये

मुद्रक - व्यथ ग्राफिक्स
9810034653, 9810159161